यैर्दृष्टो यैः स्मृतो वापि यैः श्रुतो बोधितस्तु यैः ।
सर्वावस्थागतानां तु जीवन्मुक्तिं प्रदास्यति ॥ ६५ ॥
इति कार्यमशेषेण त्रैलोक्यस्य समापि हि ।
अनेन रामचन्द्रेण पुरुषेण महात्मना ॥ ६६ ॥
नमोऽस्मै जितमेवैते कोऽप्येवं चिरमेधताम् ।
वसिष्ठ कृपया त्वं हि व्यवहारं परं कुरु ॥ ६७ ॥

वाल्मीकिरुवाच ॥

इत्युक्त्वावस्थितस्तूष्णीं विश्वामित्रो महामुनिः ।
वसिष्ठस्तु महातेजा रामचन्द्रमभाषत ॥ ६८ ॥

वसिष्ठ उवाच ॥

राम राम महाबाहो महापुरुष चिन्मय ।
नायं विश्रान्तिकालो हि लोकानन्दमयो भव ॥ ६९ ॥
यावल्लोकपरामर्शो निरूढो नास्ति योगिनः ।
तावद्रूढसमाधित्वं न भवत्येव निर्मलम् ॥ ७० ॥
तस्माद्राज्यादिविषयान्पर्यालोच्य विनश्वरान् ।
देवकार्यादिभारांश्च त्यज पुत्र सुखी भव ॥ ७१ ॥

वाल्मीकिरुवाच ॥

इत्युक्तोऽपि यदा रामः किंचिन्नोचे लयं गतः ।
तथा सुषुम्नया सोऽपि प्रविष्टो हृदयं शनैः ॥ ७२ ॥
शक्तिप्राणमनःप्रशान्तकरणो जीवप्रकाशात्मको
नाडीरन्ध्रसुषुप्तसर्वकरणः प्रोन्मील्य नेत्रे शनैः ।
हृष्टोत्कृष्टवसिष्ठमुख्यविदुषो निर्मुक्तसर्वैषणः
कृत्याकृत्यविचारणाद्विरहितः सर्वान्प्रतीक्ष्य स्थितः॥७३॥

राम उवाच ॥

न विधिर्न निषेधश्च त्वत्प्रसादादहं पुनः ।
तथापि तव वाक्यं तत्करणीयं च सर्वदा ॥ ७४ ॥
वेदागमपुराणेषु स्मृतिष्वपि महामुने ।
गुरुवाक्यं विधिः प्रोक्तो निषेधस्तद्विपर्ययः ॥ ७५ ॥

वाल्मीकिरुवाच ॥

इत्युक्त्वा चरणौ तस्य वसिष्ठस्य महात्मनः ।
शिरस्याधाय सर्वात्मा सर्वान्प्राह घृणानिधिः ॥ ७६ ॥
सर्वे शृणुत भद्रं वो निश्चयेन सुनिश्चितम् ।
आत्मज्ञानात्परं नास्ति गुरोरपि च तद्विदः ॥ ७७ ॥

सिद्धा ऊचुः ॥

रामैवमेव सर्वेषां मनसि स्थितिमागतम् ।
त्वत्प्रसादाच्च सकलं संवादेन दृढीकृतम् ॥ ७८ ॥
सुखी भव महाराज रामचन्द्र नमोऽस्तु ते ।
वसिष्ठेनाप्यनुज्ञाता गच्छामोऽद्य यथागतम् ॥ ७९ ॥
एवमुक्त्वा गताः सर्वे रामसंस्तवने रताः ।
रामचन्द्रस्य शिरसि पौष्पी वृष्टिः पपात ह ॥ ८० ॥

वाल्मीकिरुवाच ॥

एतत्ते सर्वमाख्यातं रामचन्द्रकथानकम् ।
अनेन क्रमयोगेण भरद्वाज सुखी भव ॥ ८१ ॥

इति रघुपतिसिद्धिः प्रोदिता या मया ते
वरमुनिवचनालीरत्नमाला विचित्रा ।

निखिलकविकुलानां योगिनां सेव्यरूपा
परमगुरुकटाक्षान्मुक्तिमार्गं ददाति ॥ ८२ ॥
य इदं शृणुयान्नित्यं विधिं रामवसिष्ठयोः ।
सर्वावस्थोऽपि श्रवणान्मुक्तिमार्गं निगच्छति ॥ ८३ ॥
इह वैराग्यमुमुक्षुव्यवहारोत्पत्तिकस्थितयः ।
उपशमनिर्वाणाख्ये वासिष्ठे षट् प्रकरणानि ॥ ८४ ॥

इति श्रीतर्कवागीश्वरसाहित्याचार्यगौडमण्डलालंकारश्रीमदभिनन्दपण्डितसमुद्धृते वासिष्ठरामायणे मोक्षोपाये सारोद्धारे भरद्वाजोपाख्याने निर्वाणप्रकरणे श्रीवसिष्ठरामचन्द्रसंवादो नाम अष्टादशः सर्गः ॥ १८ ॥

समाप्तोऽयं ग्रन्थः ।



